न तस्यार्थस्तस्यार्थोऽस्ति न कर्मभिः। न समाधानजाप्याभ्यां यस्य निर्वासनं मनः ॥ २० ॥ सन्त्यक्तवासनान्मौनादृते नास्त्युत्तमं पदम् ॥ २१ ॥ वासनाहीनमप्येतच्चक्षुरादीन्द्रियं स्वतः । प्रवर्तते बहिः स्वाऽर्थे वासनामात्रकारणम् ॥ २२ ॥ अयत्नोपनतेष्वक्षि दृग्द्रव्येषु यथा पुनः ॥ नीरागमेत्र पतति तद्वत्कार्येषु धीरधीः ॥ २३ ॥ भावसंवित्प्रकटितामनुरूपा च मारुते । चित्तस्योत्पत्त्युपरमं हंसं वा मुनयो विदुः ॥२४॥ दृढाभ्यस्तपदार्थैकभावनादतिचञ्चलम् । चित्तं सञ्जायते जन्मजरामरणकारणम् ॥ २५ ॥ वासनावशतः प्राणस्पन्दस्तेन च वासना। क्रियते चित्तबीजस्य तेन बीजाङ्कुरक्रमः॥२६॥ द्वे बीजे चित्तवृक्षस्य प्राणस्पन्दनवासने । एकस्मिंश्च तयोः क्षीणे क्षिप्रं द्वे अपि नश्यतः ॥ २७ ॥ असङ्गव्यवहारत्वाद्भवभावनवर्जनात् । शरीरनाशदर्शित्वाद्वासना न प्रवर्तते । वासनासम्परित्यागाच्चित्तं गच्छत्यचित्तताम् ॥२८॥ अवासनत्वात्सततं यदा न मनुते मनः । अमनस्ता तदोदेति परमोपशमप्रदा ॥ २९ ॥ अव्युत्पन्नमना यावद्भवानज्ञाततत्पदः । गुरुशास्त्रप्रमाणैस्तु निर्णीतं तावदाचर ॥ ३० ॥ ततः पक्वकषायेण नूनं विज्ञातवस्तुना । शुभोऽप्यसौ त्वया त्याज्यो वासनौघो निराधिना ॥ ३१ ॥ द्विविधश्चित्तनाशोऽस्ति सरूपोऽरूप एव च । जीवन्मुक्तः सरूपः स्यादरूपो देहमुक्तिगः ॥ ३२ ॥ अस्य नाशमिदानीं त्वं पावने श्रृणु सादरम् ॥ ३३ ॥ चित्तनाशाभिधानं हि यदा ते विद्यते पुनः । मैत्र्यादिभिर्गुणैर्युक्तः शान्तिमेति न संशयः। भूयोजन्मविनिर्मुक्तं जीवन्मुक्तस्य तन्मनः ॥ ३४ ॥ सरूपोऽसौ मनोनाशो जीवन्मुक्तस्य विद्यते । अरूपस्तु मनोनाशो वैदेहीमुक्तिगो भवेत् ॥ ३५ ॥ सहस्राङ्कुरशाखात्मफलपल्लवशालिनः ॥ ३६ ॥ अस्य संसारवृक्षस्य मनोमूलमिदं स्थितम् । सङ्कल्प एव तन्मन्ये सङ्कल्पोपशमेन तत् ॥ ३७ ॥ शोषयाशु यथा शोषमेति संसारपादपः । उपाय एक एवास्ति मनसः स्वस्य निग्रहे ॥ ३८ ॥ मनसोऽभ्युदयो नाशो मनोनाशो महोदयः। ज्ञमनो नाशमभ्येति मनो ज्ञस्य हि श्रृङ्खला ॥ ३९ ॥ तावन्निशीव वेताला वलगन्ति हृदि वासनाः । एकतत्त्वदृढाभ्यासाद्यावन्न विजितं मनः ॥ ४० ॥ प्रक्षीणचित्तदर्पस्य निगृहीतेन्द्रियद्विषः । पद्मिन्य इव हेमन्ते क्षीयन्ते भोगवासनाः ॥ ४१ ॥ हस्तं हस्तेन सम्पीड्य दन्तैर्दन्तान्विचूर्ण्य च । अङ्गान्यङ्गैः समाक्रम्य जयेदादौ स्वकं मनः ॥ ४२ ॥ उपविश्योपविश्यैकां चिन्तकेन मुहुर्मुहुः । न शक्यते मनो जेतुं विना युक्तिमनिन्दिताम् ॥ ४३ ॥ अङ्कुशेन विना मत्तो यथा दुष्टमतङ्गजः । अध्यात्मविद्याधिगमः साधुसङ्गतिरेव च ॥ ४४ ॥ वासनासम्परित्यागः प्राणस्पन्दनिरोधनम् । एतास्ता युक्तयः पुष्टाः सन्ति चित्तजये किल ॥ ४५ ॥ सतीषु युक्तिष्वेतासु हठान्नियमयन्ति ये। चेतसो दीपमुत्सृज्य विचिन्वन्ति तमो जनैः ॥ ४६ ॥ विमूढाः कर्तुमुद्युक्ता ये हठाच्चेतसो जयम् । ते निबध्नन्ति नागेन्द्रमुन्मत्तं बिसतन्तुभिः ॥ ४७ ॥ द्वे बीजे चित्तवृक्षस्य वृत्तिव्रततिधारिणः । एकं प्राणपरिस्पन्दो द्वितीयं दृढभावना ॥ ४८ ॥ सा हि सर्वगता संवित्प्राणस्पन्देन चाल्यते।

चित्तैकाग्र्याद्यतो ज्ञानमुक्तं समुपजायते ॥ ४९ ॥ तत्साधनमथो ध्यानं यथावदुपदिश्यते। विनाप्यविकृतिं कृत्स्नां सम्भवव्यत्ययक्रमात् । परिशिष्टं च चिन्मात्रं चिदानन्दं विचिन्तय ॥ ५० ॥ अपानेऽस्तङ्गते प्राणो यावन्नाभ्युदितो हृदि । तावत्सा कुम्भकावस्था योगिभिर्यानुभूयते ॥ ५१ ॥ बहिरस्तङ्गते प्राणे यावन्नापान उद्गतः । तावत्पूर्णां समावस्थां बहिष्ठं कुम्भकं विदुः ॥ ५२ ॥ ब्रह्माकारमनोवृत्तिप्रवाहोऽहङ्कृतिं विना । सम्प्रज्ञातसमाधिः स्याद्ध्यानाभ्यासप्रकर्षतः ॥ ५३ ॥ प्रशान्तवृत्तिकं चित्तं परमानन्ददीपकम् । असम्प्रज्ञातनामायं समाधिर्योगिनां प्रियः ॥ ५४ ॥ प्रभाशून्यं मनःशून्यं बुद्धिशून्यं चिदात्मकम् । अतद्व्यावृत्तिरूपोऽसौ समाधिर्मुनिभावितः ॥ ५५ ॥ ऊर्ध्वपूर्णमधःपूर्णं मध्यपूर्णं शिवात्मकम् । साक्षाद्विधिमुखो ह्येष समाधिः पारमार्थिकः ॥ ५६ ॥ दृढभावनया त्यक्तपूर्वापरविचारणम् । यदादानं पदार्थस्य वासना सा प्रकीर्तिता ॥ ५७ ॥ भावितं तीव्रसंवेगादात्मना यत्तदेव सः । भवत्याशु कपिश्रेष्ठ विगतेतरवासनः ॥५८॥ तादृग्रूपो हि पुरुषो वासनाविवशीकृतः । सम्पश्यति यदैवैतत्सद्वस्त्विति विमुह्यति ॥५९॥ वासनावेगवैचित्र्यात्स्वरूपं न जहाति तत् । भ्रान्तं पश्यति दुर्दृष्टिः सर्वं मदवशादिव ॥ ६० ॥ वासना द्विविधा प्रोक्ता शुद्धा च मलिना तथा । मलिना जन्महेतुः स्याच्छुद्धा जन्मविनाशिनी ॥ ६१ ॥ अज्ञानसुघनाकारा घनाहङ्कारशालिनी । पुनर्जन्मकरी प्रोक्ता मलिना वासना बुधैः । पुनर्जन्माङ्कुरं त्यक्त्वा स्थितिः सम्भ्रष्टबीजवत् ॥ ६२ ॥ बहुशास्त्रकथाकन्थारोमन्थेन वृथैव किम् । अन्वेष्टव्यं प्रयत्नेन मारुते ज्योतिरान्तरम् ॥ ६३ ॥ दर्शनादर्शने हित्वा स्वयं केवलरूपतः । य आस्ते कपिशार्दूल ब्रह्म स ब्रह्मवित्स्वयम् ॥६४॥ अधीत्य चतुरो वेदान्सर्वशास्त्राण्यनेकशः । ब्रह्मतत्त्वं न जानाति दर्वीपहतचेतनः ॥ ६५ ॥ तन्मोहाशुचिगन्धेन न विरज्येत यः पुमान् । विरागकारणं तस्य किमन्यदुपदिश्यते ॥ ६६ ॥ अत्यन्तमलिनो देहो देही चात्यन्तनिर्मलः । उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते ॥ ६७ ॥ बन्धो हि वासनाबद्धो मोक्षः स्याद्वासनाक्षयः । वासनां सम्परित्यज्य मोक्षार्थित्वमपि त्यज ॥ ६८ ॥ मानसीर्वासनाः पूर्वं त्यक्त्वा विषयवासनाः । मैत्र्यादिवासनानाम्नीर्गृहाणामलवासनाः ॥ ६९ ॥ ता अप्यतः परित्यज्य ताभिर्व्यवहरन्नपि । अन्तःशान्तः समस्नेहो भव चिन्मात्रवासनः ॥ ७० ॥ तामप्यथ परित्यज्य मनोबुद्धिसमन्विताम् । शेषस्थिरसमाधानो मयि त्वं भव मारुते ॥ ७१ ॥ अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् । अनामगोत्रं मम रूपमीदृशं भजस्व नित्यं पवनात्मजार्तिहन् ॥ ७२ ॥ दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमक्षरम् । अलेपकं सर्वगतं यदद्वयं तदेव चाहं सकलं विमुक्त ॐ ॥ ७३ ॥ दृशिस्तु शुद्धोऽहमविक्रियात्मको न मेऽस्ति कश्चिद्विषयः स्वभावतः । पुरस्तिरश्चोर्ध्वमधश्च सर्वतः सुपूर्णभूमाहमितीह भावय ॥ ७४ ॥ अजोऽमरश्चैव तथाऽजरोऽमृतः स्वयम्प्रभः सर्वगतोऽहमव्ययः । न कारणं कार्यमतीत्य

निर्मलः सदैव तृप्तोऽहमितीह भावय ॥ ७५ ॥ जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते । विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ ७६ ॥ तदेतदृचाभ्युक्तम् । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीच चक्षुराततम् ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ ॐसत्यमित्युपनिषत् । ॐपूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ इति मुक्तिकोपनिषत् ।

समाप्ताश्चेशाद्यष्टोत्तरशतोपनिषदः ।

---

